विश्वमध्वमहापरिषत् ग्रन्थमाला

# पवित्रारोपणविधिः




... प्रकाशकः ...

श्रीमज्जगद्गुरु श्रीमन् मध्वाचार्य मूलमहासंस्थानम् श्रीउत्तरादिमठः

**विश्वमध्वमहापरिषत्**

श्रीजयतीर्थविद्यापीठम्, बेंगळूरु – ४

# ।। पवित्रारोपणविधिः ।।

## ... पवित्रसमर्पणकालः ...

''तन्त्रप्रकाशे-

कर्काटकगते सूर्ये तथा सिंहगतेऽपि वा ।
द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात्पवित्रकम् ।।

एतस्मिन् काले असम्भवे तु कार्तिकावधिर्गौणः काल उक्तो दीपिकायाम्-

पवित्रारोपणं विद्यात् ('विद्यात्'नि.सि.पाठः )श्रावणे न भवेद्यदि । कार्तिक्यवधि शुक्रास्ते ('शुक्लार्के' इति क्वचित् । तदा शुक्लद्वादश्यामित्यर्थः) कर्तव्यमिति नारदः ।। इति । शुक्रास्तेऽपि कर्तव्यमित्यर्थः ।'' इति स्मृतिकौस्तुभे ।

## .... अथ पवित्रनिर्माणप्रकारः ....

'कृत्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ।
तत्रोत्तमं पवित्रं तु षष्ट्या सह शतैस्त्रिभिः ।।

सप्तत्या सहितं द्वाभ्यां शताभ्यां मध्यमं स्मृतम् ।
साशीतिना शतेनैव कनिष्ठं तत्समाचरेत् ।।

साधारणपवित्राणि त्रिभिः सूत्रैः समाचरेत् ।
उत्तमं तु शतग्रन्थि पञ्चाशद्ग्रन्थि मध्यमम् ।।
कनिष्ठं तु पवित्रं स्यात् षट्त्रिंशद्ग्रन्थि शोभनम् ।

**षट्त्रिंषच्च चतुर्विंशत् द्वादशेति च केचन ।।**
**चतुर्विंशद्द्वादशाष्टौ इत्येके मुनयो विदुः ।।'**

**हेमाद्रौ विष्णुरहस्ये तु अन्यथोक्तम्-**

**'अष्टोत्तरशतं कुर्यात् चतुःपञ्चाशदेव वा ।**
**सप्तविंशतिरेवाथ ज्येष्ठमध्यकनीयसम् ।।**
**अधमं नाभिमात्रं स्यात् ऊरुमात्रं द्वितीयकम् ।**
**प्रलम्बतो जानुमात्रं प्रतिमायां निगद्यते ।।' इति निर्णयसिन्धौ ।**

**हेमरौप्यताम्रान्यतमसूत्रस्य कुमारीकर्तितकार्पाससूत्रस्य वा नवसूत्रीं विधाय ततः उत्तममध्यमकनिष्ठानि पवित्राणि कुर्यात् ।**

| **सूत्राणि** | **ग्रन्थयः** | **परिमाणम्** |
|---|---|---|
| ३६० | १०० | पादपर्यन्तम् उत्तमम् । |
| २७० | ५० | जानुपर्यन्तम् मध्यमम् । |
| १८० | ३६ | नाभिपर्यन्तम् अधमम् । इत्येकः पक्षः । |

| | | | |
|---|---|---|---|
| १०८ | ३६ | १०८ | २४ |
| ५४ | २४ | ५४ | १२ |
| २७ | १२ इति अन्यः | २७ | ८ इति अपरः |

| | | |
|---|---|---|
| *१००८–१०८/१२०– | १०८ | वनमाला पवित्रम् । |
| १२ | १२ | गन्धपवित्रं वितस्तिमात्रम् । |
| २७ | ८ | गुरुपवित्रम् । |

*वनमालादि पवित्राणां विनियोगः उत्तरत्र द्रष्टव्यः ।

**एवं उपरिनिर्दिष्टपक्षेषु हेमाद्रि उदाहृत विष्णुरहस्योक्तपक्षः संप्रदाये प्रवृत्तः । तथा च तदनुसारेण उत्तममध्यमाधमपवित्राणि विधाय, एकं वनमालापवित्रम्, एकं गन्धपवित्रम्, एकं गुरुपवित्रम् इत्येवं पवित्राणि कृत्वा अधिवासनं कुर्यात् ।**

# अथ अधिवासविधिः

आचम्य, प्राणानायम्य, देशकालौ स्मृत्वा श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं अधिवासनविधिपूर्वकं पवित्रारोपणं करिष्ये ।

सर्वाणि पवित्राणि पञ्चगव्येन प्रोक्ष्य, प्रणवेन प्रक्षाल्य, विष्णुसूक्तेन तथा मूलमन्त्रेण अष्टोत्तरशतवारं अभिमन्त्र्य, कुङ्कुमागरुचन्दनैः तदलाभे हरिद्रया वा ग्रन्थीन् रञ्जयेत् । ततः तानि पवित्राणि वंशपात्रे निधाय, शुद्धेन वाससा आच्छाद्य, देवदक्षिणभागे तद्वंशपात्रं स्थापयित्वा-

क्रियालोपविघातार्थं यत् त्वया विहितं प्रभो ।
मयैतत् क्रियते देव तव तुष्ट्यै पवित्रकम् ।।

न मे विघ्नो भवेद्देव कुरु नाथ दयां मयि ।
सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः ।।

उपवासेन देव त्वां तोषयामि जगत्पते ।
कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः ।।

अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् ।
तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोऽस्तु ते ।।'

(इति रामार्चनचन्द्रिकायामिति निर्णयसिन्धौ)

इति देवं सम्प्रार्थ्य अधिवासनं कुर्यात् ।

संवत्सरस्य यागस्य पवित्रीकरणाय भो ।
विष्णुलोकात् पवित्राद्य आगच्छेह नमोऽस्तु ते ।।

इति, मूलमन्त्रेण च (वासुदेवादिपञ्च, क्रुद्धोल्कादिपञ्च, विश्वाद्यष्ट, केशवादिचतुर्विंशति, वेदव्यासाद्यष्टमूर्तीश्च दोरकेषु ।

ग्रन्थिषु- क्रिया, पौरुषी, वीरा, विजया, ईशा, अपराजिता, मनोन्मनी, जया, भद्रा, मुक्तिश्चेति दशशक्तीः, रमारूपाणि च) आवाह्य,

(।। अथ प्राणप्रतिष्ठापनम् ।। अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वराः ऋषयः । ऋग्यजुस्सामाथर्वाणि छन्दांसि । क्रियामयवपुः प्राणाख्यो देवता । आं बीजं । ह्रीं शक्तिः । क्रौं कीलकं । एषु पवित्रेषु प्राणप्रतिष्ठापने विनियोगः । ॐ ह्रां अङ्गुष्ठाभ्यां नमः । ह्रीं तर्जनीभ्यां नमः । ह्रूं मध्यमाभ्यां नमः । ह्रैं अनामिकाभ्यां नमः । ह्रौं कनिष्ठिकाभ्यां नमः । ह्रः करतलकरपृष्ठाभ्यां नमः । ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा । ह्रूं शिखायै वषट् । ह्रैं कवचाय हुं । ह्रौं नेत्राभ्यां वौषट् । ह्रः अस्त्राय फट् । भूर्भुवस्सुवरोमिति दिग्बंधः ।

## ।। ध्यानम् ।।

रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदंडमिक्षूद्भवमलिगुणमप्यंकुशं पञ्चबाणान् ।
बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ।।

ॐ आं ह्रीं क्रौं । यं रं लं वं शं षं सं हं हंसस्सोऽहं । एषु पवित्रेषु प्राणास्तिष्ठन्तु । एषु पवित्रेषु जीव इव स्थितः । एषु पवित्रेषु सर्वेन्द्रियाणि मनःश्रोत्रत्वक्चक्षुजिह्वाघ्राणवाक्पाणिपाद-पायूपस्थाख्यानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।

असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिहनो धेहि भोगम् ।
ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥
पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरंतरिक्षम् ।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्या३ या स्वस्ति ॥)

मूलमन्त्रेण 'श्रीपवित्राद्यावाहितदेवताभ्यो नमः' इति गन्धाद्युपचारैः पूजयेत् ।

ततः पूर्वसम्पादितं वितस्तिमात्रं द्वादशग्रन्थिकं ''गन्धपवित्र''मादाय

विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् ।
सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ॥

इति मन्त्रेण मूलसम्पुटितेन देवपादयोः समर्पयेत् । (देवस्य दक्षिणकरे बध्नीयादिति निर्णयसिन्धौ । 'आरोपयेत् देवकण्ठे मूलमन्त्रेण भक्तितः' इति स्मृतिमुक्तावल्याम् ।)

ततः देवं पञ्चोपचारैः सम्पूज्य प्रार्थयेत्-

आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥

क्षीरोदधिमहानागशय्यावस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः ॥

निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकम् ।
सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे ॥

इति साष्टाङ्गं प्रणिपत्य पुष्पाञ्जलिं दद्यात् ।

॥ इत्यधिवासनम् ॥

# ।। अथ पवित्रारोपणविधिः ।।

श्रीगुरुभ्यो नमः । आचम्य, प्राणानायम्य, श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं संवत्सरपूजासाद्गुण्यसिद्ध्यर्थं पूर्वोक्तदेवतासन्निहित-पवित्रसमर्पणद्वारा तत् पञ्चपञ्चाशद्दैवतरूपिनारायणप्रीत्यर्थं तस्मै पवित्रारोपणमहं करिष्ये ।

शोषितं पवित्रं पात्रे निधाय, 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याम् ।। इति हस्ताभ्यां प्रोक्ष्यामीति त्रिवारं प्रोक्ष्य ।

येन देवाः पवित्रेण आत्मानं तनुते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ।।

प्राजापत्यं पवित्रं शतधारं हिरण्मयम् ।
तेन व्रतविदो वयं पूतं ब्रह्म पुनीमहे ।।

इति मन्त्रेण मूलमन्त्रेणच (१०८)अभिमन्त्र्य, पात्रे निधाय सूत्रेषु नारायणादीन् आवाहयामि ।

१.नारायणं प्रथमसूत्रे आवाहयामि ।
२.वासुदेवं द्वितीयसूत्रे आवाहयामि ।
३.विष्णुं तृतीयसूत्रे आवाहयामि ।
४.केशवं चतुर्थसूत्रे आवाहयामि ।
५.नारायणं पञ्चमसूत्रे आवाहयामि ।
६.माधवं षष्ठसूत्रे आवाहयामि ।
७.गोविन्दं सप्तमसूत्रे आवाहयामि ।
८.विष्णुं अष्टमसूत्रे आवाहयामि ।
९.मधुसूदनं नवमसूत्रे आवाहयामि ।

१०.त्रिविक्रमं दशमसूत्रे आवाहयामि ।
११.वामनं एकादशसूत्रे आवाहयामि ।
१२.श्रीधरं द्वादशसूत्रे आवाहयामि ।
१३.हृषीकेशं त्रयोदशसूत्रे आवाहयामि ।
१४.पद्मनाभं चतुर्दशसूत्रे आवाहयामि ।
१५.दामोदरं पञ्चदशसूत्रे आवाहयामि ।
१६.सङ्कर्षणं षोडशसूत्रे आवाहयामि ।
१७.वासुदेवं सप्तदशसूत्रे आवाहयामि ।
१८.प्रद्युम्नं अष्टादशसूत्रे आवाहयामि ।
१९.अनिरुद्धं एकोनविंशसूत्रे आवाहयामि ।
२०.पुरुषोत्तमं विंशसूत्रे आवाहयामि ।
२१.अधोक्षजं एकविंशसूत्रे आवाहयामि ।
२२.नारसिंहं द्वाविंशसूत्रे आवाहयामि ।
२३.अच्युतं त्रयोविंशसूत्रे आवाहयामि ।
२४.जनार्दनं चतुर्विंशसूत्रे आवाहयामि ।
२५.उपेन्द्रं पञ्चविंशसूत्रे आवाहयामि ।
२६.हरिं षड्विंशसूत्रे आवाहयामि ।
२७.कृष्णं सप्तविंशसूत्रे आवाहयामि ।

----------------------------------------------

# ।। ग्रन्थिषु आवाहनम् ।।

१.विश्वं क्रियाशक्तिसहितं(रमारूपादिसहितं)प्रथमग्रन्थौ आवाहयामि ।
२.तैजसं पौरुषशक्तिसहितं (रमारूपादिसहितं)द्वितीयग्रन्थौ आवाहयामि ।
३.प्राज्ञं वीरशक्तिसहितं (रमारूपादिसहितं)तृतीयग्रन्थौ आवाहयामि ।
४.तुर्यं विजयाशक्तिसहितं (रमारूपादिसहितं)चतुर्थग्रन्थौ आवाहयामि ।
५.आत्मानं ईशशक्तिसहितं (रमारूपादिसहितं)पञ्चमग्रन्थौ आवाहयामि ।
६.अन्तरात्मानं अपराजिताशक्तिसहितं(रमारूपादिसहितं)षष्ठग्रन्थौ '' ।
७.परमात्मानं मनोन्मनीशक्तिसहितं(रमारूपादिसहितं)सप्तमग्रन्थौ आवाहयामि।
८.ज्ञानात्मानं जयाशक्तिसहितं(रमारूपादिसहितं)अष्टमग्रन्थौ आवाहयामि ।
९.वासुदेवं भद्राशक्तिसहितं(रमारूपादिसहितं)नवमग्रन्थौ आवाहयामि ।
१०.सङ्कर्षणं मुक्तिशक्तिसहितं(रमारूपादिसहितं)दशमग्रन्थौ आवाहयामि ।
११.प्रद्युम्नं विमलाशक्तिसहितं(रमारूपादिसहितं)एकादशग्रन्थौ आवाहयामि ।
१२.अनिरुद्धं सत्याशक्तिसहितं(रमारूपादिसहितं)द्वादशग्रन्थौ आवाहयामि ।
१३.मत्स्यं सत्याशक्तिसहितं(रमारूपादिसहितं)त्रयोदशग्रन्थौ आवाहयामि ।
१४.कूर्मं सत्याशक्तिसहितं(रमारूपादिसहितं)चतुर्दशग्रन्थौ आवाहयामि ।
१५.वराहं सत्याशक्तिसहितं(रमारूपादिसहितं)पञ्चदशग्रन्थौ आवाहयामि ।
१६.नरसिंहं सत्याशक्तिसहितं(रमारूपादिसहितं)षोडशग्रन्थौ आवाहयामि ।
१७.वामनं सत्याशक्तिसहितं(रमारूपादिसहितं)सप्तदशग्रन्थौ आवाहयामि ।
१८.भार्गवं सत्याशक्तिसहितं(रमारूपादिसहितं)अष्टादशग्रन्थौ आवाहयामि ।
१९.रामं सत्याशक्तिसहितं(रमारूपादिसहितं)एकोनविंशग्रन्थौ आवाहयामि ।
२०.कृष्णं सत्याशक्तिसहितं(रमारूपादिसहितं)विंशग्रन्थौ आवाहयामि ।
२१.बुद्धं सत्याशक्तिसहितं(रमारूपादिसहितं)एकविंशग्रन्थौ आवाहयामि ।
२२.कल्किनं सत्याशक्तिसहितं(रमारूपादिसहितं)द्वाविंशग्रन्थौ आवाहयामि ।
२३.अनन्तं सत्याशक्तिसहितं(रमारूपादिसहितं)त्रयोविंशग्रन्थौ आवाहयामि ।
२४.विश्वरूपं सत्याशक्तिसहितं(रमारूपादिसहितं)चतुर्विंशग्रन्थौ आवाहयामि ।
२५.अग्निगं अनिरुद्धं सत्याशक्तिसहितं(रमारूपादिसहितं)पञ्चविंशग्रन्थौ '' ।
२६.वायुगं प्रद्युम्नं सत्याशक्तिसहितं(रमारूपादिसहितं)षड्विंशग्रन्थौ '' ।
२७.सूर्यगं सङ्कर्षणं सत्याशक्तिसहितं(रमारूपादिसहितं)सप्तविंशग्रन्थौ '' ।
**प्रजापतिगं वासुदेवं सर्वसूत्रेषु आवाहयामि ।***

*तदयं उपरिनिर्दिष्टः देवतावाहनक्रमः प्राचीन कोशेषु विद्यमानः यथावन्मुद्रितः ।

ततः (प्राणप्रतिष्ठां कृत्वा) प्रणवेन षोडशोपचारैः सम्पूज्य पवित्रारोपणाङ्गभूतां देवपूजां पवित्रपूजाञ्च करिष्ये इति सङ्कल्प्य, ततः नित्यपूजां कृत्वा गन्धदूर्वाद्युक्तं पवित्रमादाय, तानि गन्धादिफलाद्युपचारैः सम्पूज्य,

गन्धदूर्वाक्षतयुतं कनिष्ठं पवित्रमादाय

देव देव नमस्तुभ्यं गृहाणेदं पवित्रकम् ।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।।

पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव त्वत्प्रसादान्महेश्वर ।।

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्तधामभिः ।।

इति मन्त्रेण मूलसम्पुटितेन दत्वा, मध्यमोत्तमपवित्रे वनमालाञ्चैवमेव तन्मन्त्रावृत्त्या दद्यात् । ततः लक्ष्म्यादिदेवतानां पीठादिदेवतानाञ्च स्वस्वमन्त्रैः पृथक् पृथक् पवित्राणि दद्यात् । अलाभे तु एकमेव अर्पयेत् । ततः धूपदीपौ दत्वा महानैवेद्यं कुर्यात् । ततो नीराजनं कृत्वा प्रार्थयेत् ।

मणिविद्रुममालाभिः मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ।।

वनमाला यथा देव कौस्तुभं सततं हृदि ।
तद्वत् पवित्रं तन्तूनां पूजां च हृदये तव ।।

कामतोऽकामतो वापि न कृतं नियमार्चनम् ।
केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे ।।

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।**
**यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥**

**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।**
**दासोऽहमिति मत्वा मां क्षमस्व पुरुषोत्तम ॥ इति ।**

**ततो गुरुं सम्पूज्य पवित्रं दत्वा, अन्यब्राह्मणेभ्यः सुवासिनीभ्यश्च अन्यानि दत्वा स्वयमपि सकुटुम्बो धारयेत् ॥ ततो ब्राह्मणैः सह भुक्त्वा त्रिरात्रं ब्रह्मचर्यादिनियमवान् देवे पवित्रं सदर्भं संस्थापयेत् । देवस्य स्नानाद्युपचारान् पवित्राण्युत्तार्य कारयेत् ।**

**मासं पक्षं अहोरात्रं त्रिरात्रं धारयेत्तथा ।**
**देवे तं सूत्रसन्दर्भं देशकालविवक्षया ॥**

**अकरणे तु तत्रैव-**
**पवित्रारोपणं काले न करोति कथञ्चन ।**
**तदाऽयुतं जपेन्मन्त्रं स्तोत्रं वापि समाहितः ॥ इति ।**

**ततः सम्पूज्य जीर्णपवित्रं विसृजेत् ।**

**यस्य स्मृत्या ...॥**

**॥ समस्तगुर्वन्तर्गत-भारतीरमणमुख्यप्राणान्तर्गत-**

**श्रीकृष्णार्पणमस्तु ॥**

## ।। अथ स्मृतिमुक्तावल्युक्तपवित्रारोपणविधिः ।।

अथ वक्ष्ये नृसिंहस्य पवित्रारोपणं परम् ।
तस्मात् पूजा कृता सर्वा कृते यस्मिन् कृता भवेत् ।।

गते संवत्सरे यस्तु न कुर्वीत पवित्रकम् ।
सांवत्सरी महापूजा निष्फला भवति ध्रुवम् ।।

श्रावणश्चोत्तमो मासो नभस्यो मध्यमः स्मृतः ।
सिते हरिदिने तत्र पूर्णिमायां तु विष्णवे ।।

पट्टसूत्रं क्षौमसूत्रं कार्पासादि यथाधनम् ।
ब्रह्मण्या भर्तृमत्या वा गतभर्तृकयापि वा ।।

तच्च मौल्येन गृह्णीयात् स्वगृहे वापि कारयेत् ।
सूक्ष्मं मृदु समं शुक्लं केशकीटादिवर्जितम् ।।

त्रिगुणं त्रिगुणीकृत्य प्रक्षाल्यामलवारिणा ।
पवित्राणि तथा कुर्यात् ज्येष्ठादीनि यथाविधि ।।
प्रतिमायास्तथा जानुनाभिप्रमाणकम् ।
अष्टोत्तरशतं सूत्रं षट्त्रिंशद्ग्रन्थिसंयुतम् ।।
चतुर्विंशतिबन्धं तु उत्तमार्थं तु मध्यमम् ।
कनिष्ठं तु तदर्धं स्यात् द्वादशग्रन्थिसंयुतम् ।।
अष्टोत्तरशतग्रन्थिरष्टोत्तरसहस्रकम् ।
पवित्रं वनमालाख्यं गङ्गामालाभिधश्च तत् ।।
आपादमौलिपर्यन्तं गङ्गामालाप्रमाणकम् ।
जानूरुनाभिलम्बीनि पवित्राण्यपराणि तु ।।
सर्वग्रन्थियुतं वाथ उक्तग्रन्थ्याथवा भवेत् ।
पीठावरणदेवानां यथाशास्त्रं पवित्रकम् ।।
गुरोर्मध्यमिकायां तु शिष्यायोक्तं कनिष्ठवत् ।

त्रिसूत्रेण वयस्यानां पवित्रे गुरुशिष्ययोः ।।
त्रिसूत्राणि पवित्राणि विप्राणां योषितामपि ।
ज्येष्ठादीनि पवित्राणि कुङ्कुमागरुचन्दनैः ।।
रञ्जयेद् विष्णुसूक्तेन तदलाभे हरिद्रया ।
वेणुपात्रेषु संस्थाप्य शुद्धेनाच्छाद्य वाससा ।।
पवित्रदानदिवसात् प्राग्दिनं सद्य एव वा ।
कृत्वैवं गुर्वनुज्ञातः कुर्यात् तदधिवासनम् ।।
मूलमन्त्रेण तत्सूत्रं पात्रं देवस्य दक्षिणे ।
स्थापयित्वा अस्त्रमन्त्रेण सर्वमन्त्रावकुण्ठितम् ।।
एवं संशोध्य पुष्पान्तं कृत्वा देवस्य पूजनम् ।
अस्त्रेण मन्त्रितान् दिक्षु सिद्धार्थान् विन्यसेत् सुधीः ।।
सांवत्सरस्य यागस्य पवित्रीकरणाय भो ।
विष्णुलोकात् पवित्रं त्वं आगताय नमो नमः ।।
लक्ष्मीनिवास देवेश वनमालाविभूषित ।
गङ्गावतार सूत्रेऽस्मिन् सन्निधिं कुरु केशव ।।
सर्वाभरणचित्राङ्ग सर्वदेवनमस्कृत ।
लावण्यरूप विश्वात्मन् ज्येष्ठसूत्रं समाश्रय ।।
कन्दर्पकोटिलावण्य दुर्गाकोट्यरिमर्दन ।
अगण्यतेजसाक्रान्त मध्यमं सूत्रमाश्रय ।।
अतिवेग मरुद्योने पुरुषार्थप्रदायक ।
कनीयो देवदेवेश तेजसा सूत्रमाश्रय ।।
सर्वाधार धराधीश सर्वकर्ता जगत्पते ।
सर्वात्मन्नङ्ग सूत्रेऽस्मिन् सान्निध्यं कुरु ते नमः ।।
नारायणो नर इति मन्त्रैर्ग्रन्थ्यां च पूजयेत् ।
गङ्गावतारमालाया मूलमन्त्रेण वा बुधः ।।
षट्त्रिंशत्तत्वमनुना ज्येष्ठसूत्रं समर्चयेत् ।
चतुर्विंशतिमन्त्रेण मध्यमं केशवादिभिः ।।

कनिष्ठं पूजयेत् मूलमनुना चेतराणि तु ।
सर्वाणि मूलमनुना स्पृशन्नष्टोत्तरं शतम् ।।
अभिमन्त्र्य च धूपेन वासयेच्च सुगन्धिना ।
तेषां तानि पवित्राणि समादाय कृताञ्जलिः ।।
हरेरभिमुखो भूत्वा अर्चयेत् स्वस्वमन्त्रकैः ।
आरोपयेत् देवकण्ठे मूलमन्त्रेण भक्तितः ।।
आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु ते नमः ।।
ततो विचित्रं नैवेद्यं दत्वा देवाय भक्तितः ।
ततस्तत्रैव तत्पात्रं नाममन्त्रावगाहितम् ।।
रक्षितं चास्त्रमन्त्रेण सुगुप्तमधिवासयेत् ।
रात्रौ जागरणं कुर्यात् यथाविभवतः शुचिः ।।

।। इत्यधिवासविधिः ।।

प्रभाते नित्यकर्माणि निर्वर्त्य हरिमर्चयेत् ।
तूर्यशङ्खनिनादेन ब्रह्मघोषजयस्वनैः ।।
समं समयतः सर्वैः 'कनिक्रदिति' मन्त्रतः ।
कृष्ण कृष्ण नमस्तुभ्यं गृहाणेदं पवित्रकम् ।।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।
अथवा मूलमनुना चार्पयेत् सर्वमञ्जसा ।।
लक्ष्म्यादिदेवतानाञ्च स्वस्वमन्त्रैः पृथक् पृथक् ।
पीठादिदेवतानां च अलाभे चैकमेव वा ।।
धूपदीपौ तथा दत्वा नैवेद्यं बहुविस्तृतम् ।
दीपमालां ततः कृत्वा प्रार्थयित्वा हरिं पुनः ।।
मणिविद्रुममालाभिः मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ।।
वनमाला यथा देव कौस्तुभं सततं हृदि ।

तद्वत् पवित्रं तन्तूनां पूजां च हृदये तव ।।
कामतोऽकामतो वापि न कृतं नियमार्चनम् ।
केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे ।।
वज्रवैडूर्यनीलाद्यैः मुक्तामरकतादिभिः ।
संवत्सरकृता पूजा लक्ष्मीप्रिय सदा भवेत् ।।
यन्मे भवसमुद्भूतं देवेदं कल्पमर्चनम् ।
प्रभाते पूर्णतां यातु प्रसादात् तव केशव ।।
इति सम्प्रार्थ्य देवेशं नमस्कृत्वा क्षमाप्य च ।
सम्पूज्य स्वगुरुं पश्चात् गन्धपुष्पाक्षतादिभिः ।।
यथाशक्ति नमस्कृत्य दद्यात् तस्मै पवित्रकम् ।
विष्णुतेजोभवं रम्यं सर्वपातकनाशनम् ।।
सर्वकामप्रदं ब्रह्मन् तवाङ्गे धारयाम्यहम् ।
गुरोरभावे तत्पुत्रं तदभावे तु पौत्रकम् ।।
ततश्च वैष्णवान् विप्रान् मृष्टान्नेन तु भोजयेत् ।
बन्धुस्वपुत्रमित्राद्यैः भुञ्जीत सहितः स्वयम् ।।
दिनानि त्रीणि पक्षं वा षण्मासमथवा यजेत् ।
पवित्राणि समारोप्य देवदेवं च नित्यदा ।।
सद्योऽधिवासने सूत्रं सद्य एव विसर्जयेत् ।
सांवत्सरीं शुभां पूजां सम्पाद्य विधिवन्मम ।।
व्रजेत् पवित्रदो नित्यं विष्णुलोकं विसर्जितः ।
विसर्जितप्रसादं तु ज्येष्ठेभ्यो विनिवेदयेत् ।।
गुरोः पवित्रं गुरवे दद्याच्छिष्यः स्वकं वहेत् ।
कुर्यादेवं महाविष्णोः पवित्रारोपणं परम् ।।
तस्य सांवत्सरी पूजा सफला नान्यथा भवेत् ।।